# ശ്രേയസ്

ഭാരതത്തിന്റെ ആദ്ധ്യാത്മികജ്ഞാനവും സാംസ്കാരികപൈതൃകവും പരിപോഷിപ്പിക്കുകയും പ്രചരിപ്പിക്കുകയും ചെയ്യുന്ന മഹദ്ഗ്രന്ഥങ്ങൾ, അവയുടെ മൂല്യവും വ്യക്തതയും ഒട്ടും ചോർന്നുപോകാതെതന്നെ, നൂതന സാങ്കേതികവിദ്യ ഉപയോഗിച്ച് പരിരക്ഷിക്കുകയും ജിജ്ഞാസുകൾക്ക് സൗജന്യമായി പകർന്നുകൊടുക്കുകയും ചെയ്യുക എന്ന ശ്രേയസ് ഫൗണ്ടേഷന്റെ ലക്ഷ്യ സാക്ഷാത്കാരമാണ് ശ്രേയസ് ഓൺലൈൻ ഡിജിറ്റൽ ലൈബ്രറി.

ഗ്രന്ഥശാലകളുടെയും ആദ്ധ്യാത്മിക പ്രസ്ഥാനങ്ങളുടെയും വ്യക്തികളുടെയും സഹകരണത്തോടെ കോർത്തിണക്കിയിരിക്കുന്ന ഈ ഓൺലൈൻ ലൈബ്രറിയിൽ അപൂർവ്വങ്ങളായ വിശിഷ്ടഗ്രന്ഥങ്ങൾ സ്കാൻചെയ്ത് മികവാർന്ന ചെറിയ പി ഡി എഫ് ഫയലുകളായി ലഭ്യമാക്കിയിരിക്കുന്നു. ഇവ കമ്പ്യൂട്ടറിലോ പ്രിന്റ് ചെയ്തോ എളുപ്പത്തിൽ വായിക്കാവുന്നതാണ്.

ശ്രേയസ് ഓൺലൈൻ ഡിജിറ്റൽ ലൈബ്രറിയിൽ ലഭ്യമായ ഗ്രന്ഥങ്ങൾ വ്യക്തിപരമായ ആവശ്യങ്ങൾക്കുവേണ്ടി സൗജന്യമായി ഉപയോഗിക്കാവുന്നതാണ്. എന്നാൽ വാണിജ്യപരവും മറ്റുമായ കാര്യങ്ങൾക്കായി ഇവ ദുരുപയോഗം ചെയ്യുന്നത് തീർച്ചയായും അനുവദനീയമല്ല.

ഈ ഗ്രന്ഥശേഖരത്തിന് മുതൽക്കൂട്ടായ ഈ പുണ്യഗ്രന്ഥത്തിന്റെ രചയിതാവിനും പ്രകാശകർക്കും നന്ദി രേഖപ്പെടുത്തുന്നു.

ശ്രേയസ് ഓൺലൈൻ ഡിജിറ്റൽ ലൈബ്രറിയെക്കുറിച്ചും ശ്രേയസ് ഫൗണ്ടേഷനെക്കുറിച്ചും കൂടുതൽ വിവരങ്ങൾ അറിയാനും പ്രവർത്തനങ്ങളിൽ പങ്കാളിയാകാനും ശ്രേയസ് വെബ്സൈറ്റ് സന്ദർശിക്കുക.

http://sreyas.in

श्री

नीलकण्ठतीर्थपादस्वामिनाकृता

# कण्ठामृतलहरी

(टिप्पणीसहिता)

---

श्रीवर्द्धनत्तु रामन्पिळ्ळ इत्येतैः

प्रकटीकृता ।

---

PRINTERS

THE MANGALODAYAM CO., LTD.,

TRICHUR.

1914.

# शोधनपत्रम् ।



| पृ | श्लो | | | शुद्धम् |
|---|---|---|---|---|
| १० | ३ | ... | ... | दे‘वां’ल्लघु |
| ,, टि० | ५ | ... | ... | अव्यया‘त् त्य’प् |
| ११ | ६ | ... | ... | स्त्वच्छै‘ष्ठयं’ |
| ,, | ७ | ... | ... | क‘ल्लोलि’त |
| ,, टि० | ७ | ... | ... | उदि‘त्वा’द्– |
| १३ | १३ | ... | ... | ति‘मृ’दुः ॥ टि० पीय‘ङ्ग’ |
| १८ | २९ | ... | ... | हृदाऽ‘ध’त्ते |
| ,, टि० | ३१ | ... | ... | गि‘र’मुप= |
| २० | ३६ | ... | ... | स्त‘त्वं’ |
| ,, | ३९ | ... | ... | द्य‘त्स्मि’त |
| २१ | ४२ | ... | ... | मां शं‘भो’ |
| २६ | १० | ... | ... | ‘भृं’खले– |
| ,, | ,, | ... | ... | सै‘ष’ |



# Preface.

Though this small volume needs no new introduction as it was once published and almost all the copies of the first edition were distributed gratis to the learned throughout the world and as its urgent want compels us to reprint, it is now brought forward with a change of feature both internally and externally— which, I hope, is not out of place in these times of refinement and civilisation. To know the book easily, foot-notes have been added to the meanings of such difficult words as are hardly understood.

To judge the merits of this work, or the method of diction followed by His Holiness Swami Sree Nilakantha Tirtha, the author of this book, I cannot help clinging the learned men who have given very valuable opinions and echoing them, that the book is written in a splendid, lucid, and masterly style, making the profound philosophical subject ravishingly sweet and attractive. The meritorious testimonials given by the learned public and its steady demand now, themselves show

how valuable and enlighten . the book is. In conclusion the public will, I hope, congratulate the publisher's attempt in every way.

SREE VARDHANATHU HOUSE
MARUTHUKULANGARAY
20th June 1914

K. N. KRISHNA PILLAI.



॥ श्रीः ॥

महाराजभावनगराधीश्वरप्रसादासादितवर्षाशनादिबहु-
मानचिह्नयुक्तवेदवेदाङ्गादिनिखिलवाङ्मयावार-
पारीणमहामहिमश्रीपण्डितमूर्धन्यनिर्भय-
रामजीयाज्ञिकमहोदयानामिदं—,

श्रीगणनायकाय नमः—

भावनगरतः क्रियते विज्ञप्तिर्याज्ञिकावटंकेन ।
निर्भयरामेण मया नीलग्रीवादितीर्थपादेभ्यः ॥ १ ॥

अथ नीलकण्ठयमिपादपङ्कजे प्रणतीर्विधाय हृदये निधाय च ।
कवितां हि पुस्तकचतुष्टयीगतां क्रियते तदीयगुणवर्णना मनाक् ॥

क्व च नीलकण्ठयमिनोऽमिता गुणाः क्वनु मामकीनमतिरल्पवैभवा ।
मुखरीकरोति बत यत्तथापि मां तदवैमि भक्तिमहिमा महानिति ॥

अहमत्र भूपतिमतः परं सुखी
न हि कामये किमपि वः कृपां विना ।
परिणामि तुच्छमखिलं जगद्यतो
विदितं मया करुणया भवादृशाम् ॥ ४ ॥

लब्धवांस्त्वदिह पुस्तकद्वयं यत्र कल्पलतिका यथार्थताम् ।
स्वां व्यनक्ति निपुणं निरीक्षिता नीलकण्ठयतिराजरक्षिता ॥ ५ ॥

नीलकण्ठयातिवर्यचर्यया सार्थकीकरणकर्मधुर्यया ।
क्लेशपञ्चकहृतावपूर्वया मुन्न माति हृदि मेऽर्पितानया ॥ ६ ॥

प्रागपीदृशमवापि यन्मया पुस्तकद्वयमतीव सुन्दरम् ।
श्रीमतामतिदयालुतामियं वक्ति पुस्तकचतुष्टयी स्फुटम् ॥ ७ ॥

तत्र यामृततरंगिणी स्थिरा संविधानकलया धुरन्धरा ।
यच्च काव्यमतिमात्रमञ्जुळं तद्द्वयं हरति मानसं मलम् ॥ ८ ॥

सर्ववित्सु बहुलेखनेन किं केवलं निजगिरो विशुद्धये ।
नामभिः शितिगळस्य कोमळैः क्षाळनं किल विधीयते मया ॥ ९ ॥

गुणाढ्यकवितां कचित् कचन काळिदासच्छटां
मुरारिभणितं क च कचन भारवेर्गौरवम् ।
मयूररचनां क च कचन माघभाषामहो-
वळक्षगळतीर्थगीरनुकरोति सूक्ष्मेक्षणे ॥ १० ॥

तन्नैषधीयमपि काव्यमधः करोति
कुत्रापि कोमळपदावलिमेळनेन ।
स्याद्राजशेखरवचः किमु कौतुकाय
श्रीनीलकण्ठयतिवर्यगिरि श्रुतायाम् ॥ ११ ॥

लोलिम्बराजकवितोद्भवतीयमद्धा
श्रद्धावताञ्च जयदेवसरस्वती वा ।
नान्या चमत्कृतिचयं वितनोति चित्ते
कर्मेन्दिवर्यगिरि बुद्धिमतां वितर्कः ॥ १२ ॥

अभिद्भिः सूचिता पत्रे संख्या संख्यावतामधः
अत्रत्यानामस्ति ततो यथेच्छं संविधीयताम् ॥ १३ ॥

नागारिनन्दभूवर्षे १९६८ पौषमास्यमले दळे ।
नवम्यां भृगुवारेऽदो व्यलैखीदं दळं मया ॥ १४ ॥

॥ श्रीरस्तु ॥

---

## श्रीकृष्णो विजयतेतराम् ।

सूर्यपुरतः
पौषसुदि—१५—गुरौ ।

स्वस्ति श्रीमदनवद्यविद्यालंकारभूषितपरमयोगीन्द्रवृन्द-वन्दनीयपदारविन्दश्रीनन्दनन्दनचरणकमलसपर्यासमर्थितपुरुषा-र्थसार्थेषु गांभीर्यधैर्यौदार्यादिगुणगणगरिमविराजमानवसिष्ठादि-शिष्टानुगतश्रौतस्मार्तादिकर्मकलापप्रतिपालकेषु श्रीयुतपूज्यपादनी-

लकण्ठतीर्थस्वामिपादारविन्देषु सूर्यपुरस्थज्यौतिषिकाम्र्यकेशवराम-तनुजनुषः श्रीकृष्णशंकरशर्मणः सादरं बद्धाञ्जलिपूर्वकमगणित-नतिततयः समुल्लसन्तुतराम् । योगेश्वराणां परमात्मनां भवादृशां च कृपया सानन्दोऽस्मि । विशेषश्च, परमकृपालुभिस्तत्रभवद्भिः प्रेषितं पुस्तकचतुष्टयम स्वाराज्यसर्वस्वम् १. योगामृततर-ङ्गिणी, २, सद्गुरुसर्वस्वं, ३. श्रीमद्बाहुलेयस्तवयुतश्रीनी-लकण्ठतीर्थस्वामिचर्यामृतं, ४ अथेति समवलोक्य निखिल-ग्रन्थानालोच्य प्रकटीकृतं तद्गतं शास्त्रसारं सरळसरळां रचना-चातुरीं च विलोक्य मम ब्रह्मानन्दो बभूव । सांप्रतं वर्तमाने कठिनतरे कलिकाले स्थूलधिषणानामन्तेवासिनामध्यापकानां च परमोपकारका युष्माभी रचिता निबन्धाः सर्वसहायामिति नि-स्संशयं ब्रवीमि । किं पुनः पल्लवितेनेति शम् ॥

कृपाकांक्षी

ज्योतिषी कृष्णशंकरः ।



(Received through Sree Neelacantha Thirtha Swamipadanthevasi M. Rama Sarma.)

Dear Sir,

It is with unalloyed pleasure and sincere feelings of gratitude that I beg acknowledge the receipt of the three books viz; सङ्कल्पकल्पलतिका, योगामृततरङ्गिणी, and श्रीनीलकण्ठस्वामिचर्या, which you so kindly sent to me through Panditar Nibhayaramjiyajnik. The books are such as cannot but please the votaries humble though they be like myself, at the holy shrine of the goddess Sharada. Hoping to be excused for the trouble,

I am

23rd Jan. 1912
New English School
Bhavnagar.

Dear Sir,
Yours Gratefully
Chaganlal. T. Dave
Head master

---

संकल्पकल्पलतिका मधुसमामिष्टा मुदा मया दृष्टा ।
श्रीनीलकण्ठतीर्थैः कर्तास्याः को न जानेहम् ॥
मन्ये बुधजनतुष्ट्यै कवितावनितासुभाग्यरक्षार्थै ।
श्रीनीलकण्ठरूपं धृत्वाऽऽयातात्र शारदैव किल ॥

(Signed)

---

Dear Sir,

I ...................................am much obliged for the Sanskrit books sent by you, which indeed are very instructive reading ....................................

T. P. Thrivedi, M. A; L. L. B.
AGRA.



ता—२४—१—१९१२
माघे सुदि—५—बुधे
जामनगरात्.

सौजन्यधन्याः ! महाशयवर्याः !!

प्राक्पुस्तकत्रयमथ त्रयमद्य लब्ध्वा
तन्नैलकण्ठफणितेरमृतोपमायाः ।
माधुर्यकं सहृदयैः प्रणयेन पेय-
मास्वादयन्न सुहितत्वमुपैति चेतः ॥

अहमस्मि श्रीमतां सौजन्यवशंवदो
महामहोपाध्यायपण्डितहाथीभाईशर्मा ।



# श्रीकण्ठामृतलहरी ।

———:o:———

यमीन्द्रान्तः प्राणायमनकलयोद्भावितपदो
वचोवैचक्षण्यप्रकटनगुरुत्वे भवतु मे ।
यदीशं दक्षास्यं फणिपतिगिरादुर्भणमपि
प्रणौमि त्र्यज्येज्याजितममृतधारं परगुरुम् ॥ १ ॥

किरत्वन्तर्ज्योतिर्विभुरिह ललाटंतपलिपिङ्-
कराणक्रीतं मद्धृदयपरितापं जडमपि ।
चलत्पीयूषाब्धिस्मितधवलिताण्डप्रतिभटो
हरः संवित्सान्द्रोदरथिरुष उन्मार्गतमसः ॥ २ ॥

---

(१) दक्षमस्यति, क्षिपत इति तथोक्तः । असु—क्षेपणे ॥ गिरा = गीः । 'जल्पितं लपितं गिरा'इति कोशः । 'आपं चैव हलन्ताना'मिति भागुरिः ॥ णु—स्तवने ॥ अदा—, ॥ अजितमिति छेदे अज—गतौ ॥

(२) लिपिंकरः = लिपिकरः ॥ अर्णो वर्णः ॥ उरदथिः = समुद्रः (औणादिकः ।) इति हेमचन्द्रः ॥

अवज्ञासीर्मैनं परिणतशरच्चन्द्रसुभग-
स्त्वमानङ्गाङ्गानल ! निखिलदेवाल्लघुधिया ।
समुज्झित्वा त्वाऽऽप्यं शरणमितमानन्दसुधया-
प्लुतं धेयाः किंतु प्रकृतिमृदुलैरीक्षणशतैः ॥ ३ ॥

कुमारादिप्रज्ञाश्रितजडिमसंक्षोदपटिम-
प्रवेष्टाग्रोद्बुद्धाद्वयवचनचिन्मुद्र इह मे ।
स्वभूरग्रे भूयाल्लघु नयनयुग्मं मम फले-
ग्रहीकर्तुं नित्यं निगमशिरसा लक्षितपदः ॥ ४ ॥

विभो ! यं त्वां धातृप्रभृतय उपानुग्रहगणै-
रिति त्वा लोकालोकत इदमिहत्येतमवितुम् ।
महेन्द्रीयागात्प्रत्यज भव ममाभीष्टकरणे
न चेद्विश्वासोऽस्यापथगतिवशादस्तमयंते ॥ ५ ॥

---

(३) आनङ्गाङ्गानल = अनङ्ग (संबन्धि) देहदाहक ॥

(४) अद्वैतमिति चोक्तिश्च प्रकाशाव्यभिचारतः । प्रकाश एव सततं तस्मान्मौनं हि युज्यते । इति पारमर्षवचनादद्वयपदव्याख्याने चिन् (मौन) मुद्रैव ज्यायसीति बोधनायैवमुक्तम् ॥ 'फलानि गृह्णातीति' फलेग्रहिः = सफलः ॥

(५) उप त्वां = (त्वत्तो) हीनाः । 'उपोधिके च' ॥ इहत्यः-- अव्ययात्यप् ॥ महेन्द्रीयागात् प्रति = हरिचन्दनस्य प्रतिनिधिः । 'महेन्द्राद्घाणौ च चाच्छः' । 'प्रतिः प्रतिनिधि'— इति पञ्चमी ॥ अपथं नपुसकम् ॥

श्रुतौ यो ब्रह्माणं त्वह ह विदधातीति मुखवा-
ञ्जयं सौधं स्वस्फूर्त्युदयजनकं पीतमभवत् ।
दृशा भोस्त्वच्छ्रैठ्यं वद वद नु गोपायितुमपि
त्वमीशो नो विघ्नस्तदवतु नो दक्षिणमुखः ॥ ६ ॥

ऋते चैत्ताद्वार्तात् क्वनु भवति शं शङ्करकरा-
द्विभो तद्राद्धौ वर्धितमिह समं ना हसति हि ।
प्रसन्नः कारुण्यामृतजलधिकल्पोल्पितदृशा
त्वमेको दातुं तत्प्रभुरिति वृणोम्येतदचल ॥ ७ ॥

वदान्यं यातोन्यं कमलभवनाद्येकवसते-
रनाप्येष्टं दक्षास्यत इति भवेच्चेत्किमपरम् ।
तदानन्देन्दून्नं कुवलपतिकान्तं मम मनो
विधत्तामद्वैतश्रुतिशतवचोमृग्यचरण ॥ ८ ॥

हृदुन्मोहग्राहग्रहगरगृहीतस्य नियतं
ममेशो बोधेनोदयविदितजीवातुवरदः ।

(६) गोपायितुं—'गुपूधूपेति—, आयः ॥ 'तं प्रत्यञ्चं दक्षिणवक्त्रं शिवमीडे'—इति श्रीभाष्यकाराः । कविरूढ्या दक्षिणमुख इति स एवोच्यते ॥

(७) चैत्तम् = चित्तसंबन्धि ॥ 'वार्तं पाटवमारोग्यं'—इति कोशः । वृधु—छेदने । (उदित्वाद्वर्धति) ॥

(८) उन्नम् = क्लिन्नम् । (उन्दी—क्लेदने) ॥ 'कुवलं तूल्पलं कुवं'---इति कोशः ॥

भव त्वं नान्योऽतः परमवनमस्येत्यपि वचो
न दोषायास्याप्तावधिगतपदः स्याद्यदव तत् ॥ ९ ॥

चिदादित्यस्योदित्वरकरभराभोगपविता-
न्तरङ्गाम्भोजं मां सुखयतु वदान्यः क इह भोः ।
अहं तूच्छिष्टस्तावक इति दृशाऽन्धीकृतदृशा-
समश्चैवोज्झेत्तन्मयि कुरु कृपां दक्षिणशिव ॥ १० ॥

पुरां हन्तू रक्तांबककषितकन्तू रविपदं
मनोराजीवाख्यो जिगमिषति सर्वज्ञ भगवन् ।
भवेक्षातः संसृत्यपथनिविवृत्सुस्तदव मा-
मभूमिः खानां त्वं निरवधिकृपाभूमिरपि यत् ॥ ११ ॥

पुराऽऽरब्धं ज्ञानोदयत इति मुख्यश्रुतिबला-
दनारब्धेत्यादिप्रबलतमकानीनवचनात् ।

(११) कन्तुः = कन्दर्पः । रोरीति रेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः ॥ भवस्य, ईक्षा; ईक्षणम् ॥ 'खमिन्द्रिये'—इति विश्वप्रकाशः ॥

(१२) कानीनवचनमिह व्याससूत्रं ज्ञेयम् । 'कन्यायाः कनीन च'—(कन्याया अनूढाया अपत्यं, अण्) कानीनो व्यासः । 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' इति तत्सूत्रं त्वत्र प्रकृतम् ॥

तथेशोक्तेश्छिन्नं न च यदि कृतं कर्म मम चे-
न्नयैतच्छान्तिं त्वं हरहर समाधेरिव दृशा ॥१२॥

तनुं नाम्ना त्र्यंबकचितिमयं ताम्यति परं
पुराराते मद्धृद्विटप इह भो गर्वर इति ।
यदाश्लेषी नेयात्पुनरपि सुदुर्यौवतपथं
घृणायास्तद्भूयाः पुरण इव तस्मिन्नतिमुदुः ॥१३॥

अशुद्धोऽहं शुद्धस्त्वमिति मनुषे चेच्छिरसि ते
नृमुण्डस्रक् किं नानुचितमृतभूतिश्च वपुषि ।
तथा द्वैपं वासः फणप उत भूषा न भवतः
सतीत्थं त्वच्छाठ्यं स्फुटमज विधूयैतदव माम्॥१४॥

प्रभो श्रीकण्ठायं कुकुर इव निस्तक्ष्य हृदयं
नियोज्येशे तद्दृञ्जयकबलगृध्नुर्भवति हि ।
इदानीं त्वं दध्या इति निहितनेत्रद्वयमिमं
शिवेऽनालोच्याश्वेव तु करुणयावाङ्ग पशुप ॥ १५ ॥

---

(१३) तनुम् = तन्वीं । 'योतो गुणवचनात्' ॥ त्रयी = वेदः अम्बकम् = ईक्षणम् । 'अम्बकेक्षणाक्षीणि'—इति यादवप्रकाशः ॥ क्वचिद्भाषायामपीयङोदेशस्येष्टत्वात्त्रियम्बकस्यापि साधुत्वमिति वाचस्पतिः ॥ तमु—कांक्षायां । सक—, ॥ गर्वरः = गर्विष्ठः ॥ यौवतम् = युवतिसमूहः ॥ पुरणः = समुद्रः ॥

(१४) द्वीपिनो विकारः—अञ् । द्वैपम् = व्याघ्रचर्म ॥

(१५) कुकुरः = कुक्कुरः । (अनादिकोशात्) ॥

दृढप्रज्ञस्त्वं वाद्यहमिति तु निर्मोक्ष्यत इति
श्रुतं तद्वान् बोधादसितगल एषोऽयमिति सन् ।
तपत्वद्याप्येवं कथमज हरिज्यैनमवितुं
विलंबोऽतः कार्यो नहि नहि कृपासौधजलधे ॥ १६ ॥

हृदन्तः पूर्वाद्रिं तिलकयतु चिद्भानुरुद्यन्
स भर्गाख्यं तेजो विदितमिह यस्मिन्भगवति ।
यदंशुस्रक् सम्यग्घृदयदरजं धूनयति त-
त्तमस्तस्मान्नित्यं निरुपमकृपं तं प्रणुवति ॥ १७ ॥

मनस्तापैकागारिक इव सुबोधोदयधनं
भवद्दासान्मत्तो मुमुषिषति रात्रिंदिवमयम् ।
त्रिलोकीजानिस्त्वं नहि विशय एनं वसुहरं
प्रमथ्यास्माज्ज्ञानं सह निलयनं पालय हर ॥ १८ ॥

(१६) हरिज्य = सर्पमौर्वीक ॥

(१७) दरम् = गर्तम् ॥ धूनयति धूञ्—कम्पने । 'धूनोति चम्पक-वनानि'—इति कविरहस्ये हलायुधभट्टः ॥ णू—स्तुतौ ॥

(१८) ऐकागारिकश्चौरः । एकमसहायमगारं प्रयोजनमस्य (ठक्) ॥ वि-शयः = संशयः ॥ 'वसु तोये धने मणौ' इति वैजयन्ती ॥

जटाजूटो विद्युद्बहुलसहकृत्वाऽमृतघटी-
वटी भद्रा मुद्रा लिपिरपि च यस्यैव जगति ।
करे 'दह्नो भालांबक' इतरयोः प्रस्नुतकृपा-
रसस्तस्माद्देवं परमज न जानामि गिरिशात् ॥ १९ ॥

यदालोकेन्दूनो भवति गदयित्नुर्यदि जडोऽ-
प्यथान्धो दक्षाय्येक्षणसदृशदृक् खञ्जक इह ।
स्वयं गन्तुं शक्तश्चटकवदतो मीरकरुणं
यजेऽन्तः सन्तापापहमहमजं दक्षिणमुखम् ॥ २० ॥

जगत्सोतः ! पुत्रीयति करुणया भृत्यमिह को
भवत्तोन्यः शून्यावसथविदथप्रेष्ठ भगवन् ।
अतो वृत्तेरन्धंकरणमवलुप्येश्वर भवा-
नमानस्यं हृत्खेऽमृतमयसुवृष्टिं वितनुतात् ॥ २१ ॥

विभोर्दक्षास्यस्याप्यह ह भजनं चैव न सुखा-
करोति प्रेष्ठं यद्यवनमज किं स्वात्मन इह ।

(१९) वटी = जपवटी ॥ दह्नो वह्निः ॥

(२०) गदयित्नुर्वावदूकः ॥ दक्षाय्यो गृध्रः ॥ मीरकरुणम् = कूलङ्कषकृपम् ॥

(२१) सोतः ! = जनक ! । षु—प्रसवैश्वर्ययोः (तृच्) ॥ पुत्रीयति, पुत्रमिवाचरति । उपमानादचारे'—इति सुबन्तादाचारेऽर्थे क्यच् ॥ मानसे साधु न भवतीति कष्टदायकं—दुःखम् ॥

भवेत्कस्माद्वेति स्वयमयनमग्रे मम किर-
न्वदैतच्छंभो मामव भुविकूपस्ते नतिरियम् ॥ २२ ॥

व्यथानां पेष्टुं त्वं धियमृष सुखेनेश्वर निरङ्-
कुशानन्दं दित्सन्नजयजन एवैष भवति ।
नभस्तः षां शम्भोस्तव वशकुशाग्रयात्मशरसं-
प्रयोगात्प्राप्यामृतकलशधारां कुरु कृपाम् ॥ २३ ॥

विभोरीक्षामैत्रावरुणजठरान्तर्लैगितस-
न्मनोधैर्याम्भोधिर्दृणुत इति मां मुक्तिरमणी ।
शिवालोकं याचे सुरपुरतरुं शंभुमचलं
तदर्थं चिद्रूपं सपदि शतकृत्वः प्रणिपतन् ॥ २४ ॥

हृदाबाधां शंभो क्रथयितुमजानन्तंमम मन-
स्युदेष्यत्तापार्कं नमतु तवदृग्राभ्युपगमः ।
क्षणादस्तं भूयः सुखजलधिचन्द्रं प्रणयतात्
प्रकाशं त्वां नित्यं त्रिविधकरणैरीश्वर यजे ॥ २५ ॥

(२२) भुविकूपः = कूलमुद्वहकूपः ॥

(२३) व्यथानां पेष्टुमित्यत्र 'जासिनिप्रहणनाटक्राथपिषां हिंसायां; इ-ति कर्मणि षष्ठी ॥ ऋषि—गतौ । षाम् = जटाम् । (नभस्तः = चिदाकाशगुहातः) ॥

(२४) मित्रावरुणयोरपत्यं—अण्; मैत्रावरुणः = कुम्भसम्भवः ॥

(२५) 'आबाधा वेदना दुःखं'—इति कोशः ॥ क्रथ—हिंसायाम् ॥

अयं पोतः क्षीरस्यति मृदुमनाः शम्भुकरसं-
स्थिरं सान्द्रानन्दात्मकमज नियच्छंस्तदधुना ।
अवैनं दत्तं न क्षरति हि लुभित्वाऽस्य विगमं
कृथा माऽस्मिंस्तद्धारय परिणमज्ज्योतिरुदय ॥२६॥

मनःशुम्भर्मेत्थं सुदृढनिकषाश्मन्यज इदं
विभौ घृष्ट्वा लीनं तनुम इति नोऽन्तर्दृढयति ।
घृणां कुर्वन्तस्तत्परमशिव देवेश भगव-
न्नमस्यान्नं दध्मोऽखिलवलयितानन्दमसृण ॥२७॥

यदत्यर्थं ताम्यत्यपि निरपराधप्रकृतिभू-
प्रतिष्ठां मत्स्वान्ताभिधमठरमाहां पशुपते ।
तदन्तर्भो मन्त्वर्जुनकरवनीलुञ्चनविधिं
कुठारी ते कुर्यादिति नम इदं रामगुरवे ॥ २८ ॥

---

(२६) क्षीरस्यति; 'क्षीरलवणयोर्लालसायाम्' । (लालसा = इच्छा) ॥ लुभ—गार्ध्ये ॥ विगमम् = नाशम् ॥

(२७) भर्म = सुवर्णम् ॥ नमस्या = नतिः ॥

(२८) तमु—काङ्क्षायाम् । सक—-, 'ग्लानौ च ताम्यति । काङ्क्षायामपि'—इति भट्टमल्लः ॥ 'मठरोमुणिशौण्डयोः' — ॥ 'माहा सुरभिरर्जुनी'— ॥ मन्तुरपराधः ॥

पुरारेर्दृक्कुंभाज्जनिमितकृपागस्तिरचलं
ममान्तःकुड्विन्ध्यं लघयतु सुखेन्दूच्चविधये ।
विधत्ताच्चित्ताकाशत उपरि चार्द्रत्वमिति तं
हृदाऽत्ते कृत्तेभपसिचयमीशं परशिवम् ॥ २९ ॥

परानन्दप्रेप्सुः शिवनिलयनोत्तंसमुप भोः
सुषुप्सत्येषोऽर्भः सुखमज दधीथा अवसरम् ।
विभौ तिर्यक्कारं गत इति भवेत्स्वाप्ययपदा-
द्विलाय त्वय्यानन्दथुमपि वृणोत्यर्थमसकृत् ॥ ३० ॥

भ्रमन्तं त्वं मेऽन्तर्गिरमुप सुनिर्मूल्य सुखक-
न्दलीं जाड्यस्तम्बेरममिह घृणान्दूनिगडितम् ।
विधास्यंस्तं नीत्वा बहिरथ विमर्द्येश कृपया
सभूमिं बोधं धारय पशुपते नौमि चरणम् ॥ ३१ ॥

कटाक्षस्यन्दोदस्नापितशिरसं मां विधिमुखा-
नमच्चूडापीडोपलसुमसृणीभूतचरणः ।
क्रियाच्छम्भुर्नित्यं वटनिकटवास्यौपनिषदो
नमस्यान्नेनैतं वरिवसितमेवैष कुरुतात् ॥ ३२ ॥

---

(२९) 'अगस्तिः कलशीसुतः' इति नि—, ॥ सिचयम् = वस्त्रम् ॥
(३०) अर्भोऽर्भकः । तिर्यक्कारङ्गतः = समाप्य गतः ॥ विलाय = वि-
लीय ॥ (३१) गिरिमुप = गिरौ । अव्ययीभावः । 'गिरेश्च सेनकस्य' इति विकल्पः ॥
(३२) उदम् = उदकम् ॥ औपनिषदः = उपनिषत्स्वेव वेद्यः ॥

निजानन्दोदान्धोः प्रति हरिवतंसाङ्ग भवतेऽ-
पराध्यत्यन्धो यः सुखयति न तं शङ्कर भवान् ।
प्रसद्रुः सन् स्वस्मा अररुमभिराध्यन्तमजवत्
प्रणम्रीभूतं किन्त्विति नियतमीशं हृदि भजे ॥ ३३ ॥

सुषुम्नायामन्तर्द्रढिमरमणीयत्वमुपय-
न्निरीक्षेऽक्ष्णां दूरं शिवपदमदूरं त्विति धिया ।
भ्रुवोर्मध्यज्योतिर्मुकुरनिकुरम्बादरविधिं
विधास्यत्यस्मिन्कस्तव भव विलंबोऽवितुमिमम् ॥३४॥

हृदाविद्दुर्हृद्रात्र्यटपतिहतिं कारय पुरा
विकाषिन्दक्सूरान्वयभवकृपादाशरथिना ।
अमन्दं भन्दं त्वं नियमय ततोस्यावनमनाः
परात्मानं त्वां भोः प्रणिपतति सोयं पुरहर ॥ ३५ ॥

---

(३३) वतंसोऽवतंसः । प्रसद्रुः = प्रसादशीलः ॥ अररुः = शत्रुः ॥ अ-भिराध्यन्तम् = द्रुह्यन्तम् ॥

(३५) हृदावित् = मनोवेधकृत् । हृत्पूर्वाद्व्यधधातोः क्विपि'न हि वृती'-त्यादिना पूर्वपदस्य दीर्घः ॥ रात्र्यटः = रात्रिंचरः । 'रात्रेः कृति विभाषा' —इ-ति मुमभावः ॥ भन्दम् = भद्रम् ॥

मनोऽटव्यां भ्याखेटिक इह चरन् घर्घररवा-
द्विवेकप्राग्भारोदितमुनिजनं भ्रंशयति यत् ।
समाधातस्तत्वं हर दुरपवाहं शुनमिमं
क्रथित्वा निर्बाधं कुरु सनिलयं मां मुनिमज ॥३६ ॥

उदेत्वस्यान्तर्भूधरवरदरीसंश्रितमह-
त्तमोलुण्टाकः श्रीहरचरणपीयूषकिरणः ।
विलुंबन् हृज्जूर्तिं त्वमृतनुतजीवातुबलतः
सुखं धत्तेऽयं तत्कृत इह निवृत्ते हृदि शिवम् ॥ ३७ ॥

सदा मेऽन्तर्मोदं परमशिव दृक्कल्पविटपी
कृपाख्यक्षीराब्ध्युक्षित इह सुखं पक्ष्मलयतात् ।
इदं नामान्वर्थं, न्विति विशयलेशः सहृदयं
न चालंकुर्यात्तद्व्रतवरविधाने त्वरयतु ॥ ३८ ॥

विभङ्क्तां दुश्चिन्तोपलबहुलिताद्रिं भवघृणा-
दधीचर्ष्युत्थोद्य स्मितभिदुरमीशानुमतितः ।
सुखेनैवं सत्यद्वयवयुनमात्रे परशिवे
प्रतिष्ठां विन्देयं हरवरमतो देहि भगवन् ॥ ३९ ॥

(३६) आखेटिकः = श्वा ॥ (३७) लुण्टाकश्चौरः । जल्पभिक्षकुट्टेत्या-दिना षाकन्प्रत्ययः ॥ लुबि—अर्दने ॥

(३९) वयुनमात्रे = जालस्वरूपे ॥

हृदन्तः सन्तानद्रुममपि च मुत्कोरकितमा-
स्तृणञ्छंभोर्दग्दोहद व्रजसमीपं मम सुखम् ।
द्रुतं सौषुम्नेन्दूदकविहितधारं शिवमहं
सदा दध्यां यत्त्वन्निलयनममेयं पुरहरम् ॥ ४० ॥

विधातुं सौख्यं मामकजरठहृत्पेषिभृतउ-
द्भवात्सोऽहं शंभोः स्मितकथितपीयूषमिह ते ।
परं याचे त्वाऽस्मान्मदुपरि कृपां धारय परा-
मितीशं त्वां शून्ये यज उरुधिया सोमजलतः ॥४१॥

भजेहं कैवल्याररभिदिपदं ते पशुपते
व्रजेयं स्वस्थानं यदुपकृतितोऽनन्यसुलभम् ।
प्रभो नित्यास्यानुग्रहणसमयोऽयं भवति य-
त्तदेनं मां शंभो सुखजलनिधिं कुर्वज सदा ॥ ४२ ॥

वधूर्दक्षास्यार्चा हृदयकमरं मामकमपि
स्वजेतेति प्रीणात्यहरहरिमां ध्यानबलतः ।

(४१) जरठम् = जीर्णम् ॥ पेषिर्वज्रम् ॥ शून्ये भ्रूमध्याकाशे ॥ सोम-जलम् = सौषुम्नचन्द्रामृतम् ॥

(४२) भिदिर्वज्रम । (औणादिकः) ॥

परं चायं यस्यां लगित इति वाङ्क्षेन्नहि परा-
मतो नित्यं शंभुर्भवतु विवरीतुं सुखसुधाम् ॥ ४३ ॥

तपस्यन्तं भिक्षुं निगमवचसा दर्शितपदे
महिम्नि स्वस्मिन् संस्थितिमधिगतः सन् पशुपते ।
सुखीकर्तुं नैनं हृदयमज ते सेत्स्यति घृणा-
न जानेऽपादानं विषय इह किम्वित्यवतदीट् ॥ ४४ ॥

त्रिलोकीरङ्गाङ्गनटनचटुलोपज्जलजतो
विभो युध्यत्यस्यान्तरकमलमुत्प्रेप्सुरचलः ।
युधे शंभो यत्तुंफितमथ तदीयात्पदमत-
स्तदर्थं कुर्यास्त्वं निरवधिकृपां नम्रके इह ॥ ४५ ॥

---

(४३) 'प्रतिकृतिरर्चा प्रतिमा'—इति कोशः ॥ कमरः, कामुकः ॥ लगितः = संसक्तः ॥ वाक्षि—काङ्क्षायाम् ॥

(४४) सेत्स्यति, षिधू—शास्त्रे माङ्गल्ये च ॥ अपादानं,कारणम् ॥ ईट्, ईश ।

(४५) (उः = शिवः ॥ पत्, पादम्) ॥ युध्यति—, युधमिच्छतीति क्यच् ॥ उदिति ब्रह्मोच्यते । तस्य उदिति नाम'—इति श्रुतेः ॥ युधे = यु-'द्ध ॥ तुंफ = हिंसायाम् ॥

सदा तुर्याधुर्यादरकरणभूवित्तमज मे
ददस्वान्तर्मोदं हर शिशुशशिश्लाघ्यमुकुट ।
यदाप्तौ त्रैयन्तोदितपदसमाप्त्या समरसे
निमग्नः स्यां शंभो त्वयि, मयि कृपां तद्धर पर ॥४६॥

स्वभूचन्द्रज्योत्स्नाहृदयकुवदेश्यश्रिततमो
निरस्य प्राकाश्यं धरतु नितरामस्य सदयम् ।
कलापूर्णं तं धारय इह गिरेर्मूर्ध्नि समता-
वशाच्छंभो तस्मान्मयि करुणया त्वं भव भव ॥४७॥

त्वदन्यः शून्योत्र त्रिभुवनतले वन्द्यचरणः
प्रभो यत्पद्रेणुप्रमुषिततमस्का विधिमुखाः ।
इति त्वामेवैकं शरणमितमेनं सुखसुधा-
निधिं धत्स्वानन्दामृतकलशबाहेश्वर हर ॥ ४८ ॥

सुधासिन्धुश्रीमोषणबिरुदशुंभत्पुरहर-
स्मितश्वैत्यं शैत्येन च हृदि विवर्तं भवतु मे ।
परप्रेमावासे सति हि बिवरीवृत्यत इदं
जगत्सर्वं रज्जौ भुजगवदहो यद्भगवति ॥ ४९ ॥

(४६) तुर्या—तन्नाम्न्यवस्था ॥ (४७) स्वभूः, स्वेनैव भवतीति क्विप् ॥
(४८) कलशबाह! कलशहस्त 'बाहो बाहुरिति स्मृतः' इति कोशः ॥
(४९) शुम्भ—दीप्तौ ॥ श्वैत्यं श्वेतस्य भावः (ष्यञ्) ॥

शिवं ज्ञात्वा सर्वं विगलितभिदं पूर्वमथ त-
द्विदित्वा स्वत्वेनेश्वर तदपि सन्त्यज्य सुखतः ।
अहो संविद्रूपे स्तिमितपरचित्यद्वयपदे
रमे नैजानन्दामृतरसिकभावेन सुदृगोम् ॥ ५० ॥ ॐ ॥

शुचिः समुत्थाय दिनागमे यः पठेदिमां सम्प्रयतः प्रसन्नः ।
कलेशमौलीशकृपाविशेषात्सचिन्तितार्थानखिलानुपेयात् ५१

निमूलकाषं कषितान्तरान्ध्यहंसस्य बालाद्ममुनेः प्रसादात् ।
तत्पादशिष्यासितकण्ठतीर्थसञ्जातसौभाग्यलहर्युदेतु ॥ ५२ ॥

इति श्रीमद्विद्याधिराजतीर्थपादपरमभट्टारस्वामि-
चरणकिङ्करपण्डितपदाङ्कात्याश्रमि श्री-
नीलकण्ठतीर्थस्वामिकृता श्रीक-
ण्ठामृतलहर्यपरनामिका
सौभाग्यलहरी
समाप्ता ।

---

(५२) निमूलकाषं कषति = समूलं कषीत । 'निमूलसमूलयोः कषः' ॥

## ॥ अथ प्रश्नोत्तरमंजरी ॥

---

वेद्यं किं ब्रह्मैकं कथमेतज्ज्ञायतेत्र नेति गिरा ।
अथवा तत्त्वंपदपरिशोधनरीत्या सुखं क निर्मुक्तौ ॥ १ ॥

का मुक्तिर्निरुपाधिकसच्चित्सुखवस्त्ववस्थितिर्नान्या ।
संसृतिरिति का चेत्योन्मुखता कथमस्तमेतु सा यमतः ॥ २ ॥

काऽऽदेया सत्संगतिरिह साधुः कोपरोक्षवेदनवान् ।
पुरुषः कः सिद्धार्थः कोर्थः परमप्रयोजनाभिख्यः ॥ ३ ॥

मृत्युः कः स्वात्मानवबोधो बन्धः क एषकोध्यासः ।
किमिव विषं मूर्खमनो देयं किं यस्य कस्य हितसुखदम् ॥ ४ ॥

त्याज्यं किं दौरात्म्यं किं वाऽभेद्यं विमर्शकारिमतम् ।
अचिकित्स्यमत्र किं वा दुर्हृदयान्तर्निरूढतामाप्तम् ॥ ५ ॥

किं कठिनं खलहृदयं केष्टिश्चित्तावधानता कृत्ये ।
को गुरुरान्ध्यहृदिह को बन्धुः साहाय्यकृत् सुदुर्जाते ॥ ६ ॥

संपदि किंभूतः स्यादगर्वितः कुत्रवाऽभयं सत्वे ।
कीदृक्षो विपदि स्याद्धैर्यालम्बी सुधेव का भक्तिः ॥ ७ ॥

भक्तिः कुत्र विधेया करुणारसतुन्दिले शिवांघ्रियुगे ।
[illegible] वा श्रद्धोपनिषद्गुरुवाक्येषूत्थिता प्रपत्तिर्हि । ॥ ८ ॥

पेयं किं सौषुम्नामृतमिह किं रक्ष्यमिन्दुभासि यशः ।
धार्यं किं वा शास्त्रितमृजुता धेया क वाङ्मनोवृत्त्योः ॥ ९ ॥

कस्तमश्रृखलेवासह्यं बध्नाति पूरुषं स्नेहः ।
सैव क्रमवधीकृत्य ग्रन्थिविभेदं क वैष हृदि मूढे ॥ १० ॥

किं परमं तप आत्मेन्द्रियमनसामेकयोगसंस्थानम् ।
इह भुवि क एकजिह्वः फणी खलः सद्रसः क निश्चित्ते ॥ ११ ॥

को विद्वानात्मन्ययमहमिति सर्वं विविच्य संद्रष्टा ।
विद्या काऽविद्या संविलाययित्री जनिः कुतोऽज्ञानात् ॥ १२ ॥

किं शरणीकरणीयं दैवं स्वित्पौरुषं कदाऽऽमुक्तेः ।
इह कालकूटनाम्नस्तार्तीयीको भवः क पिशुनमुखे ॥ १३ ॥

प्राणात्ययेऽपि भृत्यवदुपचर्यो को दधाति नो धर्मः ।
कस्माद्भेता सुजनोऽधर्मात्को दुःशकः स्वभावजयः ॥ १४ ॥

को वाऽतिमृत्युरात्मा सोऽपाधिक एव किं स परिशुद्धः ।
कस्येह भोक्तृतादिश्चिच्छायासहकृतात्मनोजस्य ॥ १५ ॥

तद्ध्यायतीव लेलायतीव चेति श्रुतिर्यतो वक्ति ।
का श्रुतिरुपनिषदेषाऽप्यज्ञत्वाद्युपनिषादकर्त्रीह ॥ १६ ॥

अथवोपनिषीदति तद् ब्रह्माप्नोति स्वभावमनयेति ।
संसृतिमूलच्छेदे कुठारिका का परा विरतिरेषा १७ ॥ ॐ ॥

विद्याधिराजभट्टारकगुरुकरुणार्द्रदृष्टिपातेन ।
असितगलादिकतीर्थात्प्रश्नोत्तरमंजरीह संजाता ॥ १८ ॥

इति तीर्थपादसंप्रदायप्रवर्तकषण्मुखदासापरनामकश्रीविद्याधिराजतीर्थपादपरमभट्टारस्वामिचरणदासश्रीनीलकण्ठतीर्थपादस्वामिकृता प्रश्नोत्तरमंजरी समाप्ता ॥

---

## ॥ "परमभट्टारस्वामिपञ्चकम्" ॥

॥ हरिः ॥

मंगलं दिशतु तीर्थपादवत्मोरुणोखिलकलाविलासभूः ।
स्कन्ददास इति विश्रुतः स पाणिंधयापरवराह्वयो मुनिः ॥ १ ॥

जन्ममृत्युभयदुःखवार्धिकुंभोद्भवो दिशतु मंगलं सदा ।
योगसंचयधुरंधरः स विद्याधिराज इति चापराभिधः ॥ २ ॥

श्रेयसे भवतु भूयसे विभुर्नित्यदा स यमवाच्छिखामणिः ।
यत्कटाक्षजलधौतिशुद्धदृग्वस्तुतत्वमवलोकते निजम् ॥ ३ ॥

शं तनोतु बुधवाङ्मनोतिगप्रभवो वरगुणाकरो मम ।
शिष्यहृत्तिमिरनाशनोन्मिषज्ज्ञानवह्न्यरणिसत्पदोनिशम् ॥ ४ ॥

वृत्तवित्तशुभसंततिं ददात्वावयोवधि कृपासुधाम्बुधिः ।
फक्किकाकलनसूक्ष्मवस्तुसंदर्शनीकृतमतिः परो गुरुः ५ ॥ ॐ ॥

पण्डितात्याश्रमिकृपाप्राप्तभ्रूध्यानयोगभाक् ।
इदं कनकताराख्या देवी चिन्मञ्जरी व्यधात् ॥ ६ ॥

॥ समाप्तम् ॥

( पण्डितशिवप्रसादेन संस्कृतामिदं पुस्तकम् )